# BAHUBIBAHABADA

A DISCOURSE ON THE

HINDU POLYGAMY.

BY

PANDIT TARANATHA TARKAVACHASPATI.



Calcutta:

PRINTED AT THE KAVYAPRAKASHA PRESS.

1872.

*To be had from Pandit Jibananda Vidyasagara B. A. Govt. Sanskrit College of Calcutta.*

# बहुविवाहवादः ।



गवर्णमेण्टसंस्कृतविद्यालयाध्यापक-
श्रीतारानाथ-तर्कवाचस्पति-भट्टाचार्य्येण-
विरचितः,
तेनैव संस्कृतः ।

१९१९ संवत्सरे
कलिकाताराजधान्याम्
सिमुलिया-हरिपालस्य रथ्यायां ७ संख्यभवने
काव्यप्रकाशयन्त्रे
श्रीकालीकुमार-चक्रवर्त्तिना
मुद्रितः ।

# बहुविवाहवादः ।

ईशं नत्वा दर्श्यतेऽत्र वेदादिशास्त्रसम्मतः ।
एकस्य कामतोऽनेकस्त्रीपाणिपीडनम् ।
धर्म्मतत्त्वं बुभुत्सूनां बोधनायैव सदुक्तिः ।
तेनैव कृतयत्नोऽस्मि न जिगीषास्ति चेतसः ॥

तत्रादौ विवाहपदार्थो निरूप्यते । विवाहो नाम विजातीयसंस्कारप्रयोजकं ग्रहणम् । ग्रहणञ्च ममेयमिति स्वस्वत्वास्पदीभूततया ज्ञानं स्वत्वञ्च प्रतिग्रहादिजन्यम् । सति च प्रतिग्रहादिना स्वत्वे विजातीयसंस्कारकरणयोग्यत्वात्, असति च स्वत्वे तदसम्भवादित्यन्वयव्यतिरेकाभ्यां स्वत्वस्यैव संस्कारहेतुत्वे तदुपायप्रतिग्रहादीनां तादृशसंस्कारप्रयोजकत्वम् । स च संस्कारः पाण्यादिग्रहणपूर्व्वकतद्विहितमन्त्रावधि सप्तपदीगमनविहितमन्त्रान्तमन्त्रसमुदायकरणकक्रियाकलापः तज्जन्यादृष्टविशेषो वा यतो गुणान्तराधानस्यैव संस्कारपदार्थतया तादृशक्रियाकलापस्य तज्जन्यादृष्टविशेषस्य वा प्रकृते संस्कारपदार्थत्वौचित्यात् ।

पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् ।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥

इति मनुना च तथैव प्रतिपादितम्, (मन्त्राः) मन्त्रकरण-

क्रियाकलापः तज्जन्यादृष्टविशेषो वा आयुर्वै घृतमित्यादि-वदुपचारात्, अन्यथा मन्त्राणां शब्दरूपतया आकाशमात्र-गुणत्वेन दारत्वसंपादकत्वानुपपत्तेः ।

पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते इति ।

पाणिग्रहणसंस्कार इति वदता च मनुना विवाहस्य संस्काररूपत्वं प्रकटीकृतम् । प्रकटीकृतञ्च—

विवाहमात्रं संस्कारं शूद्रोऽपि लभते सदेति

स्मृत्यन्तरेण विवाहस्य संस्काररूपत्वम् ।

स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्म्मणि ।
पिण्डानोद्वहनात्तेषां तदभावेऽपि तत्क्रमादिति ॥

उद्वाहतत्त्वधृतच्छन्दोगपरिशिष्टवचने आोद्वहनादित्युक्तेः उद्वाहस्य संस्काररूपत्वम् भङ्ग्योक्तम् । तथा हि संस्कारकर्म्म-ण्येव पित्रादेः श्राद्धविधानात् विवाहस्य संस्काररूपत्वाभावे कथङ्कारं तदभिविधिकथनं सङ्गच्छेत । अतएव दशविधसंस्कार-मध्ये विवाहगणनम् ।

अत्र वचने सुतसंस्कारकर्म्मणीत्युक्तेः—

सा प्रशस्ता द्विजातीनां दारकर्म्मणि मैथुने ।

इति मनुवचने दारत्वसंपादके कर्म्मणीत्युक्तेश्च विवाहस्य क्रियाकलापरूपत्वं सुव्यक्तमेव । एवञ्च

अतःपरं समावृत्तः कुर्य्याद्दारपरिग्रहमित्यादि ।

याज्ञवल्क्यस्मृतौ विवाहे अप्राप्तप्रापकत्वरूपोत्पत्तिविधित्वम् ग्रहणमात्रस्य विवाहरूपत्वे तस्य च रागत एव प्राप्तत्वेन तदंशे उत्पत्तिविधित्वासम्भवेन तत्र ग्रहणस्य प्राप्तत्वेऽपि प्रागुक्तसंस्कारस्याप्राप्तत्वेन तदंशे एव विधित्वसम्भवः "सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे इति न्यायस्य जागरूकत्वात्। अत एव दध्ना जुहोतीत्यादि श्रुतौ होमस्य प्राप्तत्वेन तदंशे उत्पत्तिविधित्वासम्भवेन दधिकरणकत्वमात्रांशे उत्पत्तिविधित्वं मीमांसायामुररीकृतम् उररीकृतञ्च "अरुणया पिङ्गाक्ष्या एकहायन्या गवा सोमं क्रीणाति" इत्यादौ गोविशेषणीभूतारुण्यादेर्विशेष्यद्वारा क्रयसाधनत्वेन गुणविधित्वम्।

किञ्च तादृशसंस्कारप्रागभावसहकृतग्रहणादेरेव स्वत्वहेतुत्वं न तु तद्विहीनस्य।

> बलादपहृता कन्या मन्त्रैर्यदि न संस्कृता।
> अन्यस्मै विधिवद्देया यथा कन्या तथैव सेति॥

पराशरभाष्यादिधृतकात्यायनवचनेन राक्षसादौ अपहरणमात्रे,

> अद्भिर्वाचा प्रदत्तायां म्रियेतोर्द्ध्वं वरो यदि।
> न च मन्त्रोपनीता तु कुमारी पितुरेव सेति॥

उद्वाहतत्त्वधृतवशिष्ठवचनेन वाङ्मात्रदाने उदकपूर्व्वकदाने वा मन्त्रसंस्काराभावे अन्यस्मै देयेति, यथैव कन्या (पितृसम्ब-

न्यवती)इति चोक्तेः, प्रतिग्रहीतुः स्वत्वानुत्पत्तेर्भङ्ग्यापत्तेश्च। (मन्त्रोपनीता) मन्त्रकरणकसंस्कारवतीत्यर्थ इति रघुनन्दनः। एवञ्च

प्रदानं स्वाम्यकारणमिति ।
यस्मै दद्यात् कन्या प्रदीयते ॥

इत्यादिमन्वादिवचने प्रमन्दस्वरणात् तादृशसंस्कारप्रागभावसहकृतदानस्यैव स्वत्वहेतुत्वमङ्गीकार्य्यं सर्व्वसामञ्जस्यात्। अनुत्पद्यमानस्य तु प्रागभावानङ्गीकारात् न दानमात्रात् स्वत्वम्।

किञ्च ग्रहणमात्रस्य विवाहत्वे गृहीतद्रव्यस्य दानविसर्गादिना स्वत्वनाशस्यैवोचितत्वे

न निष्क्रयविसर्गाभ्यां भर्त्तुर्भार्य्या विमुच्यते इति ।

स्मृतौ विक्रयदानादिना स्वत्वनिवृत्तिविरहस्योक्तिरनुचिता स्यात्। संस्काररूपत्वे च भार्य्यात्वस्य यावदाश्रयमनुवृत्तेः न क्रयादिना तस्य निवृत्तिरित्युचितमेव। अपरञ्च ग्रहणमात्रस्य यथा कथञ्चित् स्वत्वाधायकत्वेऽपि न समपुण्यापुण्यफलभागित्वोपपादकत्वम् संस्कारविशेषस्यैव दम्पत्योरेकहृदयत्वापादकत्वेन तथात्वस्यौचित्यात्। स्मर्य्यते च भार्य्यायाः पुण्यापुण्यतुल्यत्वम्।

शरीरार्द्धं स्मृता जाया पुण्यापुण्यफले समेति ।
अस्थिभिरस्थीनि मांसैर्मांसानि त्वचा त्वचमित्यादि ।

दायभागादिधृतश्रुत्यादिना च दम्पत्योरेकशरीराधायकत्वेन संस्कारस्य कल्पनात् तथात्वौचित्यम्।

स च संस्कारः दम्पतिनिष्ठः, एकस्यापि संस्कारस्य जाते-

आदिन्यायेन उभयनिष्ठत्वाभ्युपगमात् यथा एकेनैव जातेष्ट्यादि कर्म्मणा पुत्रस्य संस्कारः, कर्त्तुः पित्रादेरदृष्टविशेषश्च, यथा वा एकेन श्राद्धकर्म्मणा पित्रादिहितफलकादृष्टं, कर्त्तृनिष्ठा-दृष्टविशेषश्च जन्यते एवमत्रापीति मीमांसासरणिरनुसरणीया।

भार्य्याशब्दस्य पतिशब्दस्य च प्रवृत्तिनिमित्तमपि तादृश-संस्कार एव

> नोदकेन न वाचा च कन्यायाः पतिरुच्यते।
> पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे॥

निर्णयसिन्धूदाहृतस्मृतिवचनेन तथैवोक्तेः

> पाणिग्रहणेन जायात्वं, तत्र्च हि
> जायापतित्वं सप्तमे पदे इति।

उद्वाहतत्त्वधृतलघुहारीतवचनेन तथोक्तेश्च

एतदभिप्रेत्यैव रघुनन्दनेन उद्वाहतत्त्वग्रन्थे "भार्य्याशब्दो हि यूपाहवनीयादिवदलौकिकाङ्गसङ्केनालौकिकसंस्कारयुक्तस्त्री-वचन" इत्युक्तम् यथा काष्ठमात्रस्य न यूपशब्दवाच्यता न वा वह्निमात्रस्याहवनीयशब्दवाच्यता किन्तु अलौकिकमन्त्रकरण-संस्कारवत्त्वेनैव तत्तच्छब्दवाच्यता एवं भार्य्याशब्दस्यापीति निकर्षः। अत एव

> भार्य्याः कार्य्याः सजातीयाः सर्व्वेषां श्रेयसः स्युरिति।

दायभागधृतपैठीनसिवचने भार्य्यायाः कार्य्यत्वासम्भवेऽपि सविशेषणे श्रीत्यादि न्यायेन भार्य्यात्वस्य कार्य्यत्वसम्भवेन तथोक्तिः सङ्गच्छते। एवं सिद्धान्ते स्थिते क्वचित् विवाह-

शब्दस्य सोऽयं देवदत्त इत्यादिवत् जहदजहत्स्वार्थलक्षणया विशेष्यमात्रपरत्वमवसेयम् तदभिप्रायेणैव हरिवंशे चित्रकूपाख्याने—

पाणिग्रहणमन्त्राणां विघ्नं चक्रे सुदुर्मतिः ।
येन भार्य्या हृता पूर्व्वं कृतोद्वाहा परस्य वै ॥

इत्युक्तम् एवमेव रघुनन्दनभट्टाचार्य्याणामाशयः ।

तथा च विधिसमभिव्याहृतस्थले सर्व्वत्र भार्य्यादिशब्दानां विवाहशब्दस्य च संस्काररूपविशेषणपरत्वम् अनुवादाख्यायिकादिस्थले तु ग्रहणपरत्वमिति विवेकः ।

एवञ्च विशेष्यीभूतग्रहणस्यैव ब्राह्माद्यष्टविधदानादिप्रयोज्यत्वादष्टविधत्वं संस्कारस्य तु सर्व्वत्रैव समानत्वम् । अत एव प्रागुक्ते बलादपहृता कन्येत्यादिवचने व्यतिरेकमुखेन संस्कारस्यैव विवाहरूपत्वं व्यक्तमुक्तम् ।

गन्धर्वादिविवाहेषु पुनर्वैवाहिको विधिः ।
कर्त्तव्यश्च त्रिभिर्व्वर्णैः समर्थेनाग्निसाक्षिकः इति ॥

निर्णयसिन्धुपराशरभाष्यादिधृतदेवलवचने तु स्पष्टं तथोक्तम् । अत्र त्रिभिरिति विशेषणात् विप्रस्य न तत्राधिकार इति विशेषः ।

गन्धर्व्वासुरपैशाचा विवाहा राक्षसश्च यः ।
पूर्व्वं परिणयस्तत्र पश्चाद्धोमो विधीयते ॥

इति निर्णयसिन्धुपराशरभाष्यधृतच्छन्दोगपरिशिष्टवचने च तथैव सुव्यक्तमुक्तम् ।

तत्राय' विशेषः सवर्णायाः पाणिग्रहणेन संस्कारः, असवर्णानां तु क्षत्रियादीनां विप्रेण शरादिग्रहणेनेति ।

पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते इति ।
शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्ययेति च ॥

मनुना तथैव प्रतिपादनात् ।

स च विवाहः धनार्ज्जनादिवत् पुरुषार्थ एव न क्रत्वर्थः क्रत्वर्थत्वे यूपादिसंस्काराणामिव प्रतिकर्म्मावृत्तिप्रसङ्गः । पुरुषार्थत्वेन विहितस्यापि तस्य पत्नीकर्त्तृकाज्यावेक्षणादिरूपाङ्गसम्पादनद्वारा क्रतूपकारकत्वं न स्वतः, यथा धनार्ज्जनस्य पुरुषार्थत्वेन विहितस्यापि क्रतुसाधनद्रव्यसम्पादनद्वारा क्रतूपकारकत्वं तथा । एवञ्च विवाहस्य धर्म्मार्थत्वोक्तिः आज्यावेक्षणादिसंस्काररूपाङ्गसम्पादकत्वेनैव, न स्वतः, तस्य पुरुषार्थत्वेनैव विधानादित्युररीकार्य्यम्—व्यक्तीभविष्यति चेदमुपरिष्टात् ।

स च विवाहः त्रिविधः पुत्त्रार्थो धर्म्मार्थः रत्यर्थश्च तत्र रतिसुखस्य रागप्राप्तौ तदुपायस्य स्त्रीगमनस्यापि रागप्राप्तौ सत्यां

स्वदारनिरतः सदेति ।

मानववचनस्य परदारान् न गच्छेदिति परिसङ्ख्यापरतायाः सर्व्वैः स्वीकारेण परदारगमननिषेधात् तद्व्यावर्त्तनेन अनिषिद्धस्त्रीगमनं शास्त्रविहितस्त्रीसंस्कारं विनानुपपन्नमिति अनिषिद्धताप्रयोजकः संस्कार आक्षिप्यते । आक्षिप्यते च "औरसपुत्त्रोत्पत्तिः अनिषिद्धस्त्रीगमनं विनानुपपन्ना" इति औरसपुत्त्रोत्पत्त्यन्यथानुपपत्त्या शास्त्रविहितः संस्कारः । अत एव

> सवर्णायां संस्कृतायां स्वयमुत्पादयेत्तु यम् ।
> औरसं तं विजानीयादिति ॥

स्मृतावौरससम्बन्धनिर्व्वचनाय संस्कृतायामित्युक्तम्

> अपत्यं धर्म्मकार्य्याणि शुश्रूषा रतिरुत्तमा ।
> दाराधीनस्तथा स्वर्गः पितॄणामात्मनश्च—

इति मनुना च अपत्यादेर्दाराधीनत्वं प्रतिपादितम् तेन विवाहस्य अपत्याद्यर्थत्वलाभः । तत्र—

> पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः ।
> तस्मात् पुत्त्र इति प्रोक्त इत्यादि

दायभागधृतवचनेन पुन्नामकनरकनिस्तारकत्वेन पुत्त्रसम्बन्धनिर्व्वचनात् पुत्त्रस्य नरकरूपदुःखनिवृत्तिरूपस्य स्वतःप्रयोजनस्य साधनत्वेन पुरुषार्थत्वम् 'परदारान् न गच्छेत्' इत्यादिशास्त्रेण परदारगमनस्य निषेधेन तत्परिहारेण स्त्र्यभिगमसाध्या पुत्त्रोत्पत्तिः भार्य्यात्वरूपसंस्कारं विनानुपपन्नेत्यनुपपत्तिज्ञानसहकारेण पुत्त्रादेर्दाराधीनत्वं कल्प्यम् । सस्त्रीको धर्म्ममाचरेदित्यादिशास्त्रेण धर्म्मकार्य्येषु दम्पत्योः सहाधिकारप्रतिपादनेन धर्म्मकार्य्याणां दाराधीनत्वम् तच्च धनवान् सुखीत्यादौ विशिष्टवैशिष्ट्यावगाहिबोधमर्य्यादया विशेषणीभूतधनादीनां यथा प्रयोज्यतया सुखादावन्वयस्तथैव दाराणां धर्म्मे प्रयोज्यतयाऽन्वयेन धर्म्मादेर्दारप्रयोज्यतालाभः । गार्हस्थ्योचितधर्म्माचाराणां फलत्वकथनाय धर्म्मकार्य्या-

णीत्युक्तम्। दुःखासम्भिन्नसुखस्वरूपस्वर्गस्य मुख्यप्रयोजनतया तदुपायभूतधर्म्मादेः पुरुषार्थत्वम्। एवमलौकिकसंस्काररूप-भार्य्यत्वस्य अलौकिकादृष्टद्वारा मुख्यप्रयोजनद्वयार्थत्वमभि-धाय लौकिकसुखसम्पादकस्य शुश्रूषादेस्तत्फलत्वमन्तेऽभि-हितम्। तत्रापि शुश्रूषायाः असंस्कृतदासादिसाध्यतया अनैकान्तिकत्वात् न विवाहफलत्वम् किन्तु रतेरेव, तथा च रतिफलोद्देशेनैव कृते विवाहे नान्तरीयकविधया शुश्रूषादि-सम्भवः इति विवाहस्य न तदर्थत्वम्। किञ्च विवाहजन्यसं-स्कारस्य दम्पतिनिष्ठतया दम्पतिगतयोरेवापत्यधर्म्मकार्य्ययो-र्यथा विवाहप्रयोजनत्वम् एवमुभयनिष्ठरतिसुखसाधनत्वेन रतेरेव विवाहार्थत्वं युक्तम् न शुश्रूषाजन्यसुखस्य, तस्य पति-मात्रनिष्ठत्वादैकाश्याभावाच्च इति दम्पतिनिष्ठसंस्कारस्य न तत्प्रयोजनत्वम्। इत्थं लौकिकसुखसाधनस्य रतेरेव विवाह-प्रयोजनत्वमुक्तम्। तच्च अनिषिद्धस्त्र्यभिगमजन्यं रतिसुखं विवाहसंस्कारं विनानुपपन्नमित्यनुपपत्तिज्ञानसहकारेण कल्प्यते। यद्यपि धर्म्मार्थविवाहेनैव स्त्रियाः संस्कृतत्वात् तद-भिगमनस्यानिषिद्धत्वात् अनिषिद्धस्त्रीगमनसिद्धेः विवाहस्य रतिफलत्वकल्पनमनुचितम् तथापि रतिरुत्तमेति विशेषणात् उत्कृष्टरतेश्च बहुस्त्रीसाध्यतया बहुस्त्रीविवाहस्य उत्कृष्टरति-साधनतया तत्फलत्वम्।

इत्येवं विवाहस्य अपत्यादित्रितयप्रयोजनत्वं प्रथमार्द्धे दर्शितम्। उत्तरार्द्धे तु धर्म्मकार्य्याणां स्वर्गद्वारैव, अपत्यस्य

पितृणामात्मनश्च स्वर्गसाधनत्वेनैव विवाहप्रयोजनत्वमित्येव दर्शितम् न तु स्वर्गस्य पृथक् प्रयोजनत्वम्—अपत्याद्यर्थत्वकथनेनैव गतार्थत्वात् । अपत्यस्य स्वर्गसाधनत्वन्तु

> पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते इत्यादिना
> लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः ।

इत्यादियाज्ञवल्क्यवचनेन च प्रतिपादितम् तस्यैवेदम् । एवं स्थिते विवाहस्य त्रिविधफलत्वे

> असपिण्डा च या मातुरसगोत्रा च या पितुः ।
> सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने इति

मनुवचने मैथुन इति पदेन प्रागुक्तत्रितयफलग्रहणम् मैथुने (स्त्रीपुंसरूपमिथुनसाध्ये) अग्न्याधानपुत्रोत्पत्तिरतिरूपफलत्रये न तु योगरूढ्या लोकप्रसिद्धरतिमात्रे । व्याख्यातञ्च स्मार्त्तभट्टाचार्य्येणापि उद्वाहतत्त्वे तथैव । अपत्यधर्म्मकार्य्यादीनां येषामेव स्वयं विवाहफलत्वं सन्दर्शितम् तेषामेव मैथुनशब्दवाच्यता युक्तेत्येवमवसीयते सप्तमी निमित्तार्थे मैथुननिमित्ते दारकर्म्मणीत्यर्थः ।

एतत् सर्व्वमभिसन्धाय विज्ञानेश्वरेण मिताक्षरायामाचाराध्याये रतिपुत्त्रधर्म्मार्थत्वेन विवाहस्त्रिविध इत्युक्तम् ।

मनुवचने विवाहफलकथने रतेरन्ते निवेशेऽपि तत्र रतिशब्दस्य पूर्व्वनिर्द्देशः हरिहरावित्यादौ हरेरिव रतिशब्दस्य घ्यन्तत्वात्, कुशकाशमित्यादाविव लघ्वक्षरत्वाद्वा समर्थनीयः ।

ततश्च रतिशब्दस्य द्वन्द्वे पूर्व्वनिर्द्देशेऽपि विधिकाले सर्व्वान्ते परामर्श इति न काचिदनुपपत्तिः।

इत्येवमर्थवादोल्लिखितफलत्रयानुसारेण पुत्त्रकामो विवहेत्, धर्म्मकामो विवहेत्, रतिकामो विवहेत् इत्येवं विधित्रयं कल्प्यं यद्यपि मनुवचने समुच्चितपुत्त्रादिफलश्रुतेः समुच्चितफलार्थतया एक एव विधिः कल्पयितुं युक्तः तथापि

> पुत्त्रार्थे क्रियते भार्य्या पुत्त्रः पिण्डप्रयोजन इति वचने
> लोकानन्त्यं दिवः प्राप्तिः पुत्त्रपौत्त्रप्रपौत्त्रकैः।
> यस्मात् तस्मात् स्त्रियः सेव्या भर्त्तव्याश्च सुरक्षिता इति।

याज्ञवल्क्यवचने च प्रत्येकफलश्रुतेः प्रत्येकफलार्थत्वेनापि विध्यन्तरकल्पनावश्यकी। कल्पितेषु च तेषु विध्यन्तरेषु न समुच्चितफलार्थत्वेन विशिष्टविधिकल्पना निष्प्रयोजनत्वात् अत एव यः पशुकाम इत्यादिना प्रतिपदादिषु एकैकफलकतया तत्तद्यागं विधाय सर्व्वेभ्यो दर्शपौर्णमासावित्यादिना प्रतिपदादिषु पश्वादिफलकत्वेन विहितानामपि सर्व्वशब्देन प्रत्येकरूपेणैव परामर्शात् समुच्चितरूपेण न तत्र तत्तत्फलार्थत्वेन दर्शादेर्विधानम् अपि तु प्रत्येकफलार्थत्वेन तत्तत्कामनासहकारेण च दर्शादेः प्रयोगभेदेनैव तत्तत्फलसिद्धिरिति

> योगसिद्धिर्व्वार्थस्योत्पत्त्यसंयोगित्वादिति

जैमिनिना योगसिद्ध्यधिकरणे सिद्धान्तितं तदनुसारेणात्रापि प्रत्येकफलार्थत्वेन विधित्रयकल्पना। तत्र सर्व्वेभ्य इति सर्व्वशब्दस्येव

तया हि सहितः सर्व्वान् पुरुषार्थान् समश्नुते ।

इति भट्टभाष्यधृतस्मृतौ सर्व्वानिति सर्व्वशब्दस्य अवस्था-विशेषात् ।

पुरुषस्य इष्टार्थाः मन्वाद्युक्ता एव अपत्यादयः इह ग्राह्याः न तु धर्म्मार्थकामरूपाः, स्त्रिया अर्थसाधनत्वस्य क्वचिदप्यनुक्तेः अर्थस्य विवाहफलत्वाभावात् । तत्र क्वचित् अपत्यं, क्वचित् धर्म्मः, क्वचिच्च उत्कृष्टरतिः फलत्वेन श्रुतम् तदेव सर्व्वशब्देन परामृष्टं, मनुना तु तानि समुच्चित्य एकत्र दर्शितानीति विशेषः । वस्तुतः तत्रापि प्रत्येकवाक्येन प्रत्येकस्य फलत्वमुक्तं न तु समुदितानामिति न समुच्चितफलकत्वमिति तत्तत्फल-कामनैव तत्तदधिकारप्रयोजिका । इयांस्तु विशेषः यदि कामनान्तरविरहस्तदा धर्म्मार्थविवाहेनैव स्त्रियाः संस्कारा-पादनात् तच्च अनिषिद्धरतेः, तदधीनपुत्त्रोत्पत्तेश्च नान्तरीय-कविधया उभयफलसिद्धौ न तदर्थं विवाहकरणावश्यकता धर्म्मविवाहेनैव सकलफललाभान्न तत्र प्रवृत्तिः ।

एष्टव्या बहवः पुत्त्रा यद्यप्येको गयां व्रजेदिति

पराशरभाष्यधृतपुराणवचनात् गौणमुख्यबहुपुत्त्रेच्छायां, विशिष्टरतिकामनायाश्च तत्तत्कामनयापि विवाहान्तरं कर्त्तुं शक्यते एव उपपादयिष्यते चैतदुपरिष्टात् ।

एवं त्रिविधफलार्थत्वेन विवाहत्रैविध्ये मन्वादिशास्त्रादि-बोधिते विज्ञानेश्वरादिभिरनुमोदिते च स्थिते विख्यातकीर्त्तिना कल्याणभाजनेन विद्यासागरेण नित्यनैमित्तिककाम्यभेदेन

विवाहत्रैविध्यं यदभिहितं तत् किं मन्वादिशास्त्रोपलब्धम्? उत स्वप्नोपलब्धम्? अथ स्वधीषणाप्रतिभासलब्धं? वा तत्र

नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमिष्यते इति।

स्नानस्य यथा त्रैविध्यप्रतिपादकशास्त्रमुपलभ्यते एवं शास्त्रोपलम्भाभावान्नाद्यः, न च तथा शास्त्रं दृश्यते न वा तेनाप्युपलब्धम्। 'ग्रन्थी भवति पण्डित' इत्युक्तिमनुसृत्य संस्कृतपाठशालातो गृहीतशकटभारपुस्तकेनापि तेन यदि किञ्चित् प्रमाणमद्रक्ष्यत तदा निरदेक्ष्यत न च निरदेशि। नापि तत्र कस्यचित् सन्दर्भस्य सम्मतिरस्ति। अतः प्रमाणोपन्यासमन्तरेण तद्वचनमात्रे विश्वासभाजः संस्कृतानभिज्ञजनान् प्रत्येव तच्छोभते न तु प्रमाणपरतन्त्रान् तात्त्विकान् प्रति। अथ स्वप्नोपलब्धं तदा आशामोदकवत् तस्यैव मोदाय, नान्येषां ज्ञातसिद्धान्तानाम्।

अतोऽसहायं स्वधीषणाप्रतिभासमात्रमवशिष्यते तत्राप्यनुयुज्यते सोऽयं तस्य धीषणाप्रतिभासः किं युक्तिमवलम्ब्य? तदनवलम्ब्य स्वेच्छामात्रेण? वा न तावत् युक्त्यनुसारी। तथा हि विवाहस्य त्रैविध्यं यत् प्रतिज्ञातम् तत् कस्मात् हेतोः? किं विवाहस्वरूपनिर्व्वाहककारणभेदात्? उत फलभेदात्? आहोस्वित् धर्म्मभेदात्? नाद्यः ब्राह्माद्यष्टविधविवाहाङ्गदानक्रयापहरणादिवत् तादृशत्रयस्य कारणभेदाभावात्। नापि द्वितीयः अस्मत्प्रतिदर्शितफलभेदवत् तदुक्तत्रैविध्ये फल-

२

भेदाभावात् । न तृतीयः धर्म्मभेदमात्रेण भेदस्वीकारे प्रमेयत्ववाच्यत्वादिना अनन्तभेदापत्तेः । अथ परस्परव्यावृत्तधर्म्मभेदात् तथा कल्पनमित्युररीक्रियते इति चेत् तथापि न निस्तारः सर्व्वं विवाहानां काम्यत्वस्य व्यवस्थापनेन तदङ्गीकृतनित्यविवाहेऽपि काम्यत्वानिवृत्तेः पत्नीमरणनिमित्तकविवाहे च नैमित्तिकत्वानपायात् परस्परव्यावृत्तधर्म्मत्वाभावात् । यथा च विवाहमात्रस्य काम्यत्वं तथा प्रतिपादितं पुरस्तात् । किञ्च

अविप्लुतब्रह्मचर्य्यो यमिच्छेत्तु तमावसेदिति ।

मिताक्षराधृतवाक्यात् ब्रह्मचर्य्यातिरिक्ताश्रमसाधस्यैव रागप्रयुक्तत्वात् गृहस्थाश्रमस्यापि रागप्रयुक्ततया तदधीनप्रवृत्तिकविवाहस्यापि रागप्रयुक्तत्वेन काम्यत्वस्यैवोचितत्वम् ।

इत्यमसौ तस्य शेमुषीप्रतिभासः तद्वाक्ये विश्वासभाजः संस्कृतभाषापरिचयशून्यान् जनान् भ्रमयन्नपि अश्वत्तर्कचक्रे निपतितः भृशमनुयोगदण्डेन भ्राम्यमाणः न क्वचित् विश्रान्तिमासादयिष्यति उपयास्यति च दुर्गमे अतिगभीरे शास्त्रजलाशये असत्तर्कावष्टम्भेन सातिशयरयशालिसलिलावर्त्तेन परिवर्त्यमानोलुपवत् बम्भ्रम्यमाणभावम्, नाप्स्यति च तलं कूलं वा, आपत्स्यते चास्मत्प्रदर्शितया प्रमाणानुसारिण्या युक्त्या वात्यया घूर्णायमानधूलिचक्रमिव निरालम्बपथम् । अतः कूलकलनाय उपदेशकान्तरकर्णधारालम्बनेन सद्युक्तितरणिरनु-

सरणीयाऽवलम्ब्यतां वा विश्रान्त्यै अवलम्बान्तरम्। अथ युक्त्यनादरेण स्वेच्छया तथा बुद्धिप्रतिभासश्चेत् स्वेच्छाचारिणमेव समादराय प्रभवन्नपि न प्रमाणपदवीमवगाहते।

अथ विवाहस्य त्रैविध्यावान्तरभेदेषु नित्यत्वं यदुररीकृतम् तत् कस्मात्? हेतोः, किं तद्विना विवाहस्वरूपासिद्धेः? उत विवाहफलासिद्धेः? उत शास्त्रप्रमाणानुसारित्वात्? नाद्यद्वितीयौ नित्यत्वं विनापि विवाहस्वरूपफलानां सिद्धेः, न हि नित्यत्वं विवाहस्वरूपनिर्व्वाहकं केनाप्युररीक्रियते फलसिद्धिप्रयोजकत्वं तु सुदूरपराहतं नित्यकर्म्मणः फलनैयत्याभावात्। तृतीयः पक्षः परिशिष्यते तत्रापीदमुच्यते प्रतिज्ञामात्रेण साध्यसिद्धेरनभ्युपगमात् हेतुभूतप्रमाणस्य तत्रानिर्द्देशान्न तस्य साध्यसाधकत्वम्। अथ अकरणे प्रत्यवायानुबन्धित्वमेव नित्यत्वे हेतुरुच्यते। अकरणे प्रत्यवायानुबन्धित्वनिर्णयस्यापि बलवदागमसाध्यत्वात् आगमस्य च तत्रानिर्द्देशात् कथङ्कारं तादृशहेतुना साध्यसिद्धिः निश्चितहेतोरेव साध्यसिद्धेः प्रयोजकत्वात् प्रत्युत

यदहरेव विरज्येत तदहरेव प्रव्रजेद्ब्रह्मचर्य्याद्वा गृहाद्वा वनाद्वेति।

श्रुत्या वैराग्यमात्रतः प्रव्रज्याया उक्त्या गृहस्थाश्रमस्य नित्यत्वबाधनात्

अविप्लुतब्रह्मचर्य्यो यमिच्छेत्तु तमावसेदिति।

प्रागुक्तवचनेन गृहस्थाश्रमादेः इच्छाधीनत्वोक्तेः, नैष्ठिक-

ब्रह्मचारिणश्च गृहस्थाश्रमाभावस्य सर्व्वसम्मतत्वाच्च। एवं तन्नित्यत्वाभावे तदधीनप्रवृत्तिकस्य विवाहस्य कथं नित्यत्वं स्यात्।

अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः।
आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते हि सः॥

इति दक्षवचने तु द्विजानामाश्रममात्रस्यैव अकरणे प्रत्यवायानुबन्धित्वकथनेऽपि गृहस्थाश्रममात्रस्य नित्यत्वाप्राप्तेः अत्र च द्विजपदस्योपलक्षणपरत्वं यदभिहितं तदपि प्रमाणसापेक्षित्वात् प्रमाणस्य चानुपन्यासादुपेक्ष्यमेव।

न च अन्यतमाश्रमस्य नित्यत्वे गृहस्थाश्रमस्यापि नित्यत्वं सत्स्यति इति वाच्यं ब्रह्मचर्य्याश्रमस्य सकलसम्मतस्यैव नित्यत्वेन तद्भिन्नस्य रागप्राप्तत्वेन काम्यत्वात्। वस्तुतः ब्रह्मचर्य्यभिन्नाश्रमस्य यथाकथञ्चित् नित्यकाम्यत्वसिद्धावपि विवाहस्य केवलनित्यत्वं कथं सेत्स्यति?। न च नित्याङ्गस्य नित्यत्वमर्थसिद्धमिति नियमोऽस्ति तथा सति

अहरहः सन्ध्यामुपासीतेति श्रुतौ।
सदोपवीतिना भाव्यमिति।

स्मृतौ च नित्यत्वव्यापकवीप्सासदादिपदादिवैयर्थ्यापत्तेः नित्याश्रमाङ्गतयैव तयोः नित्यत्वप्राप्तेः। अथ नित्याग्निहोत्रादिषु पत्न्याज्यावेक्षणादेर्नित्यत्वेन पत्नीत्वं च विवाहमन्तरा न सम्भवतीति विवाहस्य नित्यत्वमिति चेन्न खादिरयूपस्य यज्ञाङ्गतया संस्कारविधानात् 'प्रतिप्रधानं गुण आवर्त्तते' इति न्यायेन

प्रतियज्ञं यथा यूपसंस्कार आवर्त्त्यते एवं विवाहस्यापि प्रति-
यज्ञम् आवृत्तिप्रसङ्गात्। तथाकल्पने च बहुविवाहं निषेध-
तस्तस्य अनन्तविवाहविधानप्रसङ्गः मूषिकभिया पलायमानस्य
भुजङ्गमुखपतनमनुहरति अनुहरति च घट्टकटीप्रभात-
वृत्तान्तम्, यथा शुल्कदानभिया विपथेन धावमानस्य दुष्ट-
वणिजः घट्टकुटीसमीपे प्रभाते जाते आयासवैयर्थ्यम् एवं विप-
थेन धावमानस्य पुनर्बहुविवाहप्रसङ्गात् आयासवैफल्यम्। अतः
उभयतः पाशाबन्धनं कथमुत्तीर्य्येत।

अथ अग्न्याधाननित्यत्वात्तस्य चैकत्वात् तदङ्गतया नित्यत्व-
मिति न प्रतिकर्म्मावृत्तिप्रसङ्ग इति चेत् तथापि न निस्तारः
अग्नौ नष्टे दुष्टे वा पुनरप्याधानस्य विधानेन तदर्थं पुनर्व्विवाह-
प्रसङ्गात् तथाच बहुविवाहनिषेधनं रिक्तं स्यात्। अथ विवा-
हजन्यसंस्कारस्य दम्पतिनिष्ठतया आधानादिकर्त्तृपतिनिष्ठत्वा-
नपायात् न प्रतिकर्म्मावृत्तिप्रसङ्गः 'कर्तृसंस्कारकाङ्गानां प्रति-
कर्म्मनिवर्त्तनम्' इत्यभियुक्तोक्तेरिति चेन्न "साधारणासाधारण-
योर्म्मध्येऽसाधारणे कार्य्यसंप्रत्यय" इति न्यायेन कर्तृमात्रनिष्ठा-
नामेव स्नानाचमनादीनां प्रतिकर्म्मनिवर्त्तनसिद्धान्तात् विवा-
हजन्यसंस्कारस्य तु कर्तृमात्रनिष्ठत्वाभावात्। अथ गृहस्था-
श्रमस्य नित्यकाम्यत्वेन नित्यत्वानपायात्

न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते।
तया हि सहितः सर्व्वान् पुरुषार्थान् समश्नुते इति

याज्ञवल्क्यवचनेन गृहिण्या एव गृहशब्दार्थत्वप्रतिपादनात्

कृतविवाहस्यैव गृहस्थशब्दार्थत्वप्राप्तौ विवाहस्यैव गृहस्थाश्रमस्वान्नित्यत्वमिति चेत् न 'न गृहमित्यादिवाक्यस्य प्रशंसार्थवादपरतया स्वार्थे तात्पर्य्याभावेन गौणत्वात् अत एव तया हीति हिशब्देन तस्याः पुरुषार्थहेतुत्वेन गृहशब्दस्योपचारः प्रदर्शितः। असति तथात्वे तया हीत्यादि नारभ्येत। अत एव

द्वितीयमायुषो भागं कृतदारो गृहे वसेदिति।

मनुना दारकर्म्मगृहवासयोर्भेदेनोत्कीर्त्तनम्। अथ गृहस्थाश्रमसाधनत्वेन तस्य नित्यत्वं स्यादिति चेन्न गृहस्थाश्रमसाधनभूतानां धनार्ज्जनादीनामपि नित्यत्वापत्तेः उभयेषामपि पुरुषार्थत्वाविशेषात्

अथ नापुत्रस्य लोकोऽस्तीति।

अलोकतापरिहारार्थत्वेन पुत्रोत्पत्तेर्नित्यतया तदङ्गत्वेन विवाहस्य नित्यत्वमिति चेन्न नित्याङ्गमात्रस्य नित्यत्वप्रत्याख्यानात् अन्यथा पुत्रेष्टियागादेरपि नित्यत्वापत्तेः। वस्तुतः नित्यकर्म्मप्रयोगान्तर्भूताङ्गानामेव नित्यत्वं न तु तद्बहिर्भूतानां, विवाहस्य तु अग्न्याधानादिगृहस्थधर्म्मानन्तर्गतत्वात् न तदङ्गत्वेन नित्यत्वम्।

किञ्च भवतु नाम साग्निकस्य कथञ्चित् विवाहस्य नित्यकाम्यत्वं केवलनित्यत्वं तु सर्व्वथा न सेत्स्यति तथा च काम्यत्वेन सह साङ्कर्य्यात् न विभाजकोपाधित्वम्।

यदपि विभाजकोपाधितया नैमित्तिकत्वमुररीकृतं तन्नेदमुच्यते। किमिदं नैमित्तिकत्वम्? किं निमित्ताधीनत्वम्?

निमित्तनिश्चयाव्यवहितोत्तरकर्त्तव्यत्वं? वा, न तावदाद्यः कार्य्यमात्रस्य कारणसाध्यतया सर्व्वस्यैव नैमित्तिकत्वापत्तेः एवञ्च तदभिमतनित्यविवाहस्यापि दानादिप्रयोज्यतया निमित्ताधीनत्वेन नैमित्तिकत्वापत्तिः। न द्वितीयः पत्नी-मरणनिश्चयाधीनस्य तन्मते नित्यस्य द्वितीयविध्यनुसारिविवाह-स्यापि नैमित्तिकत्वापत्तेः तस्य अशौचादेरिव मरणनिमित्त-निश्चयाधीनत्वात्। किञ्च तन्मते तृतीयविध्यनुसारिविवाहस्य नैमित्तिकस्यापि नैमित्तिकत्वानुपपत्तिः तस्य शुद्धकालप्रती-क्षाधीनतया वक्ष्यमाणाष्टवर्षादिकालप्रतीक्षासद्भावेन च नि-मित्तनिश्चयाव्यवहितोत्तरं क्रियमाणत्वाभावात्। अन्यच्च

नैमित्तिकानि काम्यानि निपतन्ति यथा यथा।
तथा तथैव कार्य्याणि न कालस्तु विधीयते॥

इत्युक्तेः लुप्तसंवत्सरमलमासशुक्रास्तत्वाद्यशुद्धकालेऽपि तृतीयविध्यनुसारिणो नैमित्तिकस्य कर्त्तव्यतापत्तिः नैमित्तिके जातेष्ट्यादौ अशौचादेः शुद्धकालस्य च प्रतीक्षाभावस्य सर्व्व-सम्मतत्वात् तत्प्रतीक्षणाभावापत्तेर्दुस्तरत्वात्। मन्वादिभिश्च

वन्ध्याष्टमेऽधिवेद्याब्दे दशमे स्त्री मृतप्रजा।
एकादशे स्त्रीजननी इत्यादिना।

अष्टवर्षादिकालप्रतीक्षां वदद्भिः प्रदर्शितनैमित्तिकत्वं तस्य प्रत्याख्यातम्।

इत्थं विवाहस्य केवलनित्यत्वं केवलनैमित्तिकत्वञ्च चैवि-

ष्यविभाजकोपाधितया तेन यत् प्रमाणमन्तरेणैव कल्पितं तत् प्रतिक्षिप्तं तच्च द्विशकटपुस्तकभाराहरणेन उपदेशसहस्रानुसरणेन वा तेन समाधेयम् ।

एवं विपक्षपक्षप्रतिक्षेपेण स्वपक्षसमर्थनेन च रतिधर्म्मपुत्रार्थतया तत्तत्कामनाभेदेन विवाहत्रैविध्ये स्थेमानमासादिते सम्प्रति प्रागुक्तविधित्रयशेषतया विवाहक्रियाकर्म्मविशेषतद्गतसंख्याविशेषयोरवधारणार्थमुत्तरो ग्रन्थ आरभ्यते । तत्र इत्यादिकामो विवहेदित्यादौ विधित्रये हि "कां विवहेदिति ?" (कति वा विवहेदिति) च ? भवत्यपेक्षा, तदपेक्षायाञ्च

तस्मादेको बह्वीर्विन्दतेति श्रुतिः ।

तस्मादेकस्य बह्व्यो जाया भवन्ति नैकस्यै बहवः सह पतय इति श्रुतिः ।

भार्य्याः कार्य्याः सजातीयाः सर्व्वेषां श्रेयस्यः स्युरिति

दायभागधृतपैठीनसिस्मृतिश्च विवाहक्रियाकर्म्मगतसंख्याविशेषबहुत्वं ख्यापयन्ती एकस्यानेकविवाहं प्रतिपादयति । तत्र द्वितीयश्रुतौ नैकस्यै बहवः सह पतय इति सहशब्दोत्कीर्त्तनेन पुरुषस्य बहुजायाविधानपक्षेऽपि सहशब्दस्याकर्षणौचित्यात् सह बह्व्यो जाया भवन्तीत्यर्थलाभेन एकदापि बहुजायासम्भवः, सहशब्दाकर्षणाभावे तु कालभेदेन बहुविवाहस्येष्टत्वे स्त्रीपक्षेऽपि विधवाविवाहवादिनस्तस्यमते इष्टतया वैलक्षण्याभावात् अतः स्त्रिया यद्विषयकबहुविवाहनिषेधः तद्विषय एव पुरुषस्य बहुविवाह इत्येवं वैलक्षण्यसम्पादनाय सहशब्दाकर्षण

मवश्यं कर्त्तव्यम्। एवञ्च कालभेदेन बहुविवाहसमर्थनम् उत्तरवाक्यस्थसहशब्दसमाकर्षणाभावमूलम् तथा सति च उभयोर्व्वाक्ययोर्युगपद्विषयकत्वेन पुरुषात् स्त्रिया वैलक्षण्याभिधानं सङ्गतं स्यात्। असति च तत्समाकर्षणे एकविषयकत्वाभावेन वैलक्षण्याभिधानमसङ्गतं स्यात्। अत एव

> अथ यदि स्वकृतो द्वे भार्य्ये विन्देत कथं कुर्य्यादिति

आशङ्क्य

> यस्मिन् काले विन्देतोभावग्नी परिचरेदित्युपक्रम्य
> द्वयोर्भार्य्ययोरन्वारब्धयोर्य्यजमान इति

विधानपरिजातधृतबौधायनसूत्रेण युगपद्भार्य्याद्वयं तदनुगुणमग्निद्वयञ्च विहितं द्वयोः पत्न्योरन्वारब्धयोरिति वदता चाग्निद्वये युगपत् तयोर्होमादिसम्बन्धप्रतीतेर्युगपद्विवाहद्वयं स्पष्टमेव प्रतीयते तत्रापि द्विपदं बहुत्वस्याप्युपलक्षणं पूर्व्वोक्तश्रुतौ बहुत्वश्रवणात्

> नैकयापि विना कार्य्यमाधानं भार्य्यया द्विजैः।
> अकृतं तद्विजानीयात् सर्व्वाभिर्नारभेत यदिति॥

पराशरभाष्यधृतकात्यायनवचनेन, तदुल्लिखितेन "एककृतमकृतमेवेति" न्यायेन च व्यतिरेकेण सर्व्वाभिः सहाधानविधानेन युगपद्बहुपत्नीसम्बन्धप्रतीतेः।

> एकैकामेवासां संनह्यादेकैकां गार्हपत्यमीक्षयेत्।
> एकैकामाज्यमवेक्षयेदिति।

पराशरभाष्यधृतबौधायनसूत्रे बह्वीनां मध्ये एकैकद्वारा प्रवर्त्तनादिविधानात् भार्य्याणां बहुत्वप्रतीतेश्च।

> यदेकस्मिन् यूपे द्वे रशने परिव्ययति।
> तस्मादेको द्वे भार्य्ये विन्देतेति।

श्रुतिवाक्यस्याप्येतद्विषयकत्वम्। एवञ्च तस्य कालभेदेन वन्ध्यत्वादिकारणाधीनविवाहविषयकत्वकल्पनं साहसमात्रम् बौधायनसूत्रे युगपद्द्वयोर्भार्य्ययोर्व्विधानात्। किञ्च स्मृतिवाक्येन श्रुतिसङ्कोचस्य कल्पने स्वस्यैव विमृश्यकारिता व्याहन्येत। तेनैव विधवाविवाहद्वितीयपुस्तके १८८ पृष्ठे

> स्मृतेर्वेदविरोधे तु परित्यागो यथा भवेदिति

प्रयोगपारिजातस्मृतिवाक्यस्य, प्रथमपुस्तके ११ पृष्ठे च

> श्रुतिस्मृतिपुराणानां विरोधो यत्र विद्यते।
> तत्र श्रौतं प्रमाणं तु तयोर्द्वैधे स्मृतिर्वरेति॥

व्यासवाक्यस्य च स्वयंस्वहस्तितत्वेन इदानीं स्वाभीष्टसिद्धये तद्विरुद्धार्थकल्पने कथङ्कारं विमृश्यकारितामात्मनः परिरक्षेत्।

अत एव बलाबलाधिकरणे

> विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमिति सूत्रेण

जैमिनिना श्रुतिविरोधे स्मृतेरननुष्ठानलक्षणमप्रामाण्यं व्यवस्थापितम्।

एवञ्च श्रुतौ तदनुसारिपैठीनसिस्मृतौ च बहुभार्य्या-विधानात् तन्मूलके

एकस्य बह्व्यो विहिता महिष्यः कुरुनन्दन !।
नैकस्या बहवः पुंसः श्रूयन्ते पतयः क्वचिदिति।

महाभारतवाक्ये श्रूयन्ते इत्यनेन एकस्य बहुभार्य्याणां श्रौतत्वेन कीर्त्तनम्। एतामेव श्रुतिमनुरुन्धानैव

लोकानन्त्यं दिवः प्राप्तिः पुत्त्रपौत्त्रप्रपौत्त्रकैः।
यस्मात्तस्मात् स्त्रियः सेव्या भर्त्तव्याश्च सुरक्षिताः॥

इति याज्ञवल्क्यस्मृतिः स्त्रिय इति बहुवचनं निरदिक्षत् निरदिक्षच्च पैठानसिस्मृतिः

भार्य्याः कार्य्याः सजातीयाः सर्व्वेषां श्रेयस्य इति।

भार्य्या इति वचनम्।

न च प्रत्येकवर्णाभिप्रायेण बहुवचनमुपात्तमिति शङ्क्यम् प्रत्येकवर्णाभिप्रायकत्वे

सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्म्मणीति

मानववचन इव भार्य्या कार्य्येत्येकवचननिर्द्देशेनैव तथा-र्थावगतौ बहुवचननिर्द्देशवैयर्थ्यापत्तेः। श्रुतौ एकस्य बहु-भार्य्याविधानस्योक्ततया तदेकवाक्यत्वस्योचितत्वात्।

एतेन प्रागुक्तश्रुतिस्मृती सवर्णासवर्णागतबहुत्वविषयिके बन्ध्यत्वादिकारणाधीनबहुत्वविषयिके वेति कल्पनमप्यपास्तम् पैठीनसिवचने सजातीया इत्यनेन सवर्णागतबहुत्वस्यैव प्रतिपाद-

नात् प्रागुक्तेन बौधायनसूत्रेण च द्वयोः पत्न्योरग्न्यारम्भयो-रित्यनेन अग्न्याधाने द्वयोः पत्न्योः सहाधिकारं प्रतिपादयता सवर्णागतबहुत्वस्यैव प्रतिपादनात्,

अग्निहोत्रादिशुश्रूषां बहुभार्यः सवर्णया।
कारयेत्तद्बहुत्वे च ज्येष्ठया गर्हिता न चेत्।

इति पराशरभाष्यादिधृतकात्यायनवचनेन सवर्णाया एवाग्निहोत्रादावधिकारस्य प्रतिपादनेन सवर्णाया एवाधिकारेण बौधायनवचनस्य सवर्णामात्रविषयकत्वौचित्यात्, असवर्णायाश्च

भर्त्तुः शरीरशुश्रूषां धर्मकार्य्यञ्च नैत्यिकम्।
स्वाश्चैव कुर्य्यात् सर्व्वेषां नास्वजातिः कदाचन॥

इति मनुना धर्म्मकार्य्यमात्रेऽनधिकारस्य प्रतिपादनेन असवर्णागतबहुत्वविषयकस्यानुचितत्वात् प्रागुक्तेन "नैकयापि विना कार्य्यम्" इति कात्यायनवचनेन एकदा बह्वीभिः सार्द्धमग्न्याधानविधानेन कालान्तरभाविवन्ध्यत्वादिकृतबहुत्वविषयकताया अनुचितत्वाच्च। किञ्च

"कारयेत्तद्बहुत्वे चेति कात्यायनवचने सवर्णागतबहुत्वे सति ज्येष्ठयेति" निर्द्देशेन सवर्णामात्रगतमेव बहुत्वं प्रतीयते न तु सवर्णासवर्णागतं, कालान्तरे वन्ध्यत्वादिकारणकृतसवर्णाविवाहविषयकत्वं वा "नैकयापि विना कुर्य्यादित्यादिप्रागुक्तकात्ययनवचने सर्व्वाभिः सहैव युगपदग्न्याधानादेर्विधानात् अग्न्याधानस्य च सवर्णामात्रविषयकत्वात्।

एवञ्च श्रुतौ तन्मूलकस्मृतौ च सवर्णागतबहुत्वावगतौ तदेकवाक्यतया

उद्वहेत द्विजो भार्य्यां सवर्णां लक्षणान्विताम्।

इति मानववचने एकत्वमुद्देश्यगतत्वेनाविवक्षितम्। यथा-ग्रहं संमार्ष्टीत्यादौ मार्ज्जनरूपसंस्कारोद्देश्यतया पात्रविशेषरूपग्रहगतसंख्याया अविवक्षितत्वमेवं विवाहरूपसंस्कारोद्देश्यतया सवर्णागतैकत्वसंख्याया अविवक्षितत्वमिति मीमांसासिद्धान्तसरणिरनुसरणीया। तत्र "दश ग्रहान् गृह्णाति" इत्यादिश्रुत्यन्तरवत् "तस्मादेको बह्वीर्विन्देत" इति श्रुत्यन्तरस्य सत्त्वेन तुल्यरूपत्वात्। यथा च

याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्ज्जयेदिति

अत्र उपार्ज्जनकर्म्मधनगतैकत्वसंख्याया अविवक्षितत्वमेवं पुरुषार्थतया धनार्ज्जनतुल्यविवाहकर्म्मगतयोषिद्गतैकत्वसंख्याया अविवक्षितत्वम्। अत एवात्र कपिञ्जलाधिकरणन्यायेन न बहुत्वं त्रित्वपर्य्यवसायि विवाहस्य पुरुषार्थत्वेन क्रत्वर्थत्वाभावात्ततो वैलक्षण्यात्। तत्र हि आलम्भनकर्म्मकपिञ्जलगतबहुत्वस्य त्रित्वावधिपरार्द्धान्तविश्रान्तत्वेन कतिभिः क्रतुसिद्धिः स्यादिति? अनध्यवसायात् बहुत्वं त्रित्वपर्य्यवसायीति स्थिरीकृतं स्थिरीकृता च तत्र कपिञ्जलत्रयालम्भनेऽपि क्रतुसिद्धिरिति। इह तु विवाहस्य पुरुषार्थतया यावदिच्छं विधानसम्भवेनानध्यवसायाभावान्न तथाकल्पनमिति विशेषः। वक्ष्यमाणेन

चतुर्थादिविवाहार्थं तृतीयेऽर्कं समुद्वहेदिति

मत्स्यपुराणवचनेन चतुरादिविवाहस्य विधानेन न बहुत्वं त्रित्वपर्य्यवसायीति निर्णीयते।

शिष्टाचारोऽपि श्रुतिस्मृत्योः वर्णितविषयत्वमुद्बोलयति। तथा च ते हि शिष्टाः दर्शितविषयकत्वमेव श्रुतिस्मृत्योरवधार्य्य युगपद्बहुभार्य्यावेदने प्रवृत्ता इति पुराणादौ उपलभ्यते।

ददौ स दश धर्म्माय कश्यपाय त्रयोदश।

इति मानवे महाभारते च दक्षप्रजापतेरेकदैव कश्यपादिभ्यो बहुकन्यादानप्रतिपादनेन तद्दानाधीनविवाहस्यार्थात् बहुत्वस्य प्रतिपादनात्। यदि कश्यपादयः स्वयं स्मृतिप्रणेतारः बहुभार्य्यावेदनमशास्त्रीयमिति जानीयुः कथं तत्र प्रवर्त्तेरन्? अतस्तेषामाचारदर्शनेनैव उपदर्शितप्रकार एव शास्त्रार्थः नान्यथेत्यवधार्य्यते। एतेन स्मृतिविरोधेन शिष्टाचारस्य न प्रामाण्यमित्यवष्टम्भेन विद्यासागरस्य प्रत्यवस्थानमपि परास्तम्। यदि वयं शिष्टाचारमेव तादृशधर्म्मे प्रमाणमाचक्ष्महि भवेदेवं तदा तस्य स्मृतिविरोधेन शिष्टाचारस्याप्रामाण्योपन्यासः तदेव नास्ति। किन्तु श्रुत्यादिभिरेवावधारिते बहुसवर्णायुगपद्विवाहे परिशुद्धत्वबहुसम्मतत्वख्यापनायैव शिष्टाचारस्य समुत्कीर्त्तनं, यथा च

आगमो निष्कलस्तत्र भुक्तिः स्तोकापि यत्र नो।

इत्यत्र भोगरहितागमस्य भुक्तिरहितागमापेक्षया प्राब-

स्यम् एवमाचारानुमोदितस्यैव शास्त्रार्थनिश्चयस्य प्रामाण्य-मित्येव ज्ञापयितुं तयोत्कीर्त्तनम्।

एतेन कश्यपादीनामाचारस्य विगीतत्वेनोत्कीर्त्तनेन तेजीयस्त्वेन दोषराहित्योक्त्या च तस्य प्रत्यवस्थानमप्यपास्तम् आचारस्य विगीततायाः शास्त्रनिषिद्धतानतिवृत्तेः बहुविवाह-निषेधस्य क्वाप्यनुपलब्धेः। किञ्च तदुक्तरीत्या यदि दोषत्रय ग्रस्तपरिसंख्यापरतां मानववचनस्य ते अध्यगमिष्यन् तदा ते बहुविवाहकरणे नैव प्रावर्त्तिष्यन्त। न च तेषां तादृशी बुद्धि-शक्तिरासीत् यया दोषत्रयग्रस्तपरिसंख्यापरत्वकल्पनेनाभि-नवार्थमध्यवस्येयुः न वा विद्यासागरसन्निभः जीवनिभः धी-सचिवस्तैरासादि येन मानववचनस्य परिसंख्यापरत्वं विज्ञाप्य अधर्म्मभीरवस्ते अधर्म्मपथात् न्यवारयिषत।

यथा च मनुवचनस्य न परिसंख्यापरत्वं तथाग्रे सविस्तर-मभिधास्यते। नचान्यत् किञ्चित् बहुविवाहनिषेधकं वचनमस्ति येन बहुविवाहस्य विगीतत्वं स्यात्। न च

> एकैव भार्य्या स्त्रीकार्य्या धर्म्मकर्म्मोपयोगिनी।
> प्रार्थने चातिरागे च याद्यानेकापि च द्विज!॥

इति पुराणवचने एकैवेति एकसंख्यानिर्द्धारणेन बहुभार्य्या-निषेध इति शङ्क्यम् एतद्वचनस्य समूलत्वे एकाशब्दस्य मुख्या-वाचितया मत्वर्णपरत्वात्। तदुत्तरमेकवचनन्तु प्रागुक्तमानव-वचन इवाविवक्षितम् अन्यथा पुराणवाक्येन श्रुतिस्मृतिसङ्कोचे तस्य विसूषकारिता व्याहन्येत तच्च पूर्व्वमेव दर्शितम्।

किञ्च अत एकाशब्दस्य मुख्यापरत्वमवश्यं स्वीकार्य्यं न तु संख्यापरत्वमुत्तरार्द्धे अनेकाशब्दस्य एकवचनान्ततया निर्द्देशस्यैव तत्र लिङ्गत्वात् सति हि संख्यापरत्वे उत्तरार्द्धे अनेकाशब्दस्य "अनेके सेवन्ते भवदधिकगीर्व्वाणनिवहान्" इत्यत्रेव "पतन्त्यनेके जलधेरिवोर्म्मयः" इत्यत्रेव च बहुवचनान्ततया निर्द्देशापत्तिः । एतेन ग्राह्यानेका अपि द्विजेति अनेकाशब्दस्य बहुवचनान्तताकल्पनमप्यपास्तम् तथात्वे तद्विशेषणस्य ग्राह्याशब्दस्यापि बहुवचनान्ततापत्तेः एवञ्च ग्राह्या अनेका अपीति स्यात् अतोऽत्र विमृष्यकारिणा विमर्षपूर्व्वकं पाठसमर्थनं कर्त्तुं युक्तं तच्च न कृतमित्यतीव नः खेदाय ।

वचनार्थस्तु अर्थ्यतेऽनेनेति अर्थनमभिलाषः तस्मिन् प्रकर्षेणाभिलाषे, कस्येत्यपेक्षायां प्रागुक्तमनुवचनोपात्तविवाहफलत्रयमध्ये धर्म्मस्य पूर्व्वार्द्धे उक्तेः अतिरागे इत्यनेन रतेश्चोक्तेः परिशेषात् पुत्रस्यैव कर्म्मतया तत्रान्वयः तथा च बहुपुत्रेच्छायां विशिष्टरतीच्छायाञ्च अनेका असवर्णा अपिशब्दात् सवर्णा ग्राह्या इति । अत्रापि एकत्वमविवक्षितं तुल्ययुक्तेः । एतच्च

सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्म्मणि ।
कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशो वरा इति ॥

मानववचनसमानार्थकम् ।

एवमेकदा बहुसवर्णाविवाहपक्षे श्रुत्यादिभिः समवधारिते इदानीं क्रमशोऽपि बहुसवर्णाविवाहपक्षो व्यवस्थाप्यते ।

भार्य्यायां विद्यमानायां द्वितीयामुद्वहेद्यदि ।

> तदा वैवाहिकं कर्म्म कुर्य्यादावसथेऽग्निमान् ॥

इति निर्णयसिन्धुधृतत्रिकाण्डमण्डनवाक्येन ।

> सदारोऽन्यान् पुनर्दारानुद्वोढुं कारणान्तरात्
> यदीच्छेदग्निमान् कश्चित् क्व होमोऽस्य विधीयते
> स्वेऽग्नावेव भवेद्धोमो लौकिके न कदाचनेति

माधवाचार्य्यविधानपारिजातादिधृतकात्यायनस्मृत्या च विद्यमानभार्य्यस्यापि भार्य्यान्तरं विहितं तच्च सवर्णामात्रविषयम् अग्न्याधाने सवर्णाया एवाधिकारितायाः पूर्व्वं प्रतिपादनात्। अत एव

> अथाग्न्योर्गृह्ययोर्योगं सपत्नीभेदजातयोः ।
> सहाधिकारसिद्ध्यर्थमहं वक्ष्यामि शौनकः ॥

इति निर्णयसिन्धुधृतशौनकवचने सहाधिकारसिद्धये द्वयोरग्न्योरेकत्र समाधानमुक्तम् । अन्ते च

> पत्न्योरेका यदि मृता दग्ध्वानेनैव तां पुनः ।
> आदधीतान्यया सार्द्धमाधानविधिना गृहीति ॥

द्वयोः पत्न्योर्म्मध्ये एकस्यामरणे (अनेनैव) उभयसञ्चारितेन वह्निना (तां दग्ध्वा) (अन्यया) वर्त्तमानया सह आदधीतेति पुनराधानं विहितम्। एवञ्च विद्यमानायामेव सवर्णायां स्त्रियां पुनर्व्विवाहान्तरकरणं प्रतीयते। तत्र कात्यायनवचने कारणान्तरादित्यस्य उद्देश्यान्तरादित्यर्थः यदीच्छेदिति पदस्वारस्यात् सति हि उद्देश्ये इच्छोदयात्। एवञ्चान्तरवचनं सार्थकं स्यात् भवति च धर्म्मोद्देशेन कृतविवाहस्यापि पुनः पुत्त्ररतिरूपो-

हेतुभेदात् विवाहेच्छा । न च कारणशब्दस्य हेतुपरत्वं शङ्क्यम्, तथात्वे कारणादित्येव ब्रूयात् धर्म्मार्थविवाहे निमित्ताभावेन ततो भिन्नार्थकान्तरपदलभ्यार्थस्य प्रकृतेऽभावात् ।

एवञ्च विद्यमानायां स्त्रियां विवाहकरणमधिवेदनं तच्च द्विविधं पुत्त्रार्थं रत्यर्थञ्च । तत्र पुत्त्रार्थे अधिवेदने बन्ध्यत्वादीनि निमित्तानि, अपेक्षितानि तन्निमित्तसम्पत्तौ च तत्तत्कालातिक्रमे पूर्व्वोढ़ायाः शयनादौ परिहारपूर्व्वकं द्वितीयविवाहकरणम्

अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे त्यजेत् ।
मृतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम् ॥

इति निर्णयसिन्धुधृतसंग्रहवाक्येन दशमादिवर्षे पूर्व्वोढ़ायाः शयनादौ परित्यागविधानात् । एवञ्च पुत्त्रार्थाधिवेदने बन्ध्यत्वाद्यावेदककालः अपेक्षितः तत्कालोत्तरं तु तां परित्यज्य इतरां वोढुं शक्नोति । रत्यर्थे तु विवाहे न कालविशेषः आद्रियते किन्तु पूर्व्वोढ़ायाः धनादिना तोषणमात्रमपेक्षितमित्येव विशेषः

एकामुढ्वा तु कामार्थमन्यां वोढुं य इच्छति ।
समर्थस्तोषयित्वार्थैः पूर्व्वोढ़ामपरां वहेत् ॥

इति मदनपारिजातधृतस्मृतेः । पराशरभाष्ये विधानपारिजातादौ च एकामुत्क्रम्येति पाठः । अत्रैव मनुना

अधिविन्ना तु या नारी निर्गच्छेद्रोषिता गृहात् ।
सा सद्यस्तु निरोद्धव्या त्याज्या वा कुलसन्निधौ ॥ इति

अधिवेदनकारणसत्त्वे तत्तत्कालाधिवेदने तोषमन्तरेण गृह्याग्निगतौ च परित्यागो विहितः। ततश्चायमेव विशेषः यत् पुत्त्रार्थाधिवेदने बन्ध्यत्वादिकारणे अनुमतिमन्तरेणापि, कामार्थे तु अनुमत्येति। एवञ्च मनुयाज्ञवल्क्यादिस्मृतिषु बन्ध्यात्वनिमित्तककालप्रतीक्षावश्यकताकथनं तदूर्द्ध्वमन्तरेणाप्यनुमतिं तां परित्यज्य इतरां वोढुं शक्यते इत्येवमर्थम्, तत्परतयैव तत्तद्वचनानां सार्थक्ये नैमित्तिकविवाहान्तरकल्पनं निर्मूलमेव एवमेव चतुर्व्वेदव्याख्यातृमाधवाचार्य्येण पराशरभाष्ये व्यवस्थापितम्। न च

उद्वहेदृतिसिद्ध्यर्थं तृतीयां न कदाचन।
मोहादज्ञानतो वापि यदि गच्छेत्तु मानुषीम्॥
नश्यत्येव न सन्देहो गर्गस्य वचनं यथेति।

निर्णयसिन्धुधृतमत्स्यपुराणवचने रत्यर्थकतृतीयविवाहनिषेधः शङ्क्यः, तस्यार्कविवाहस्तावकत्वेन अर्कविवाहविधानानुसारेण तृतीयस्यापि चतुर्थतासम्पादनपरत्वात्। अत्रेदं बोध्यम्।

चपालत्य स्वधर्म्मार्थं लक्षण्यां स्त्रियमुद्वहेत्।

इत्युपक्रम्य

पुत्त्रपौत्त्रादिसम्पन्नः कुटम्बी साग्निको द्विजः।
उद्वहेदृतिसिद्ध्यर्थं तृतीयां न कदाचन।
मोहादज्ञानतो वापि यदि गच्छेत्तु मानुषीम्।
नश्यत्येव न सन्देहो गर्गस्य वचनं यथा। इति

विधानपारिजातादिधृते मत्स्यपुराणे कश्यपवचने च पुत्त्रपौत्त्रादिसम्पन्नस्य साग्निकस्य कुटुम्बवतः द्विजस्य रति-सिद्ध्यर्थं तृतीयविवाहे मानुष्या निषेधेन तादृशाधिकारिण एव रत्यर्थकतृतीयविवाहनिषेधात् अन्यस्य रत्यर्थतृतीयविवाहस्य न निषेध इति गम्यते विशेषणसार्थक्यात् शौनकेन तु तादृशा-धिकारिणोऽपि दोषपरिहारार्थं होमादिपूर्व्वकार्कविवाहकर-णानन्तरं चतुर्थविवाहोऽभिहितः ।

> तृतीयस्त्रीविवाहे तु संप्राप्ते पुरुषस्य तु ।
> अर्कं विवाहं वक्ष्यामि शौनकोऽहं विधानत इत्युपक्रम्य
> विसृज्य होम्यमग्निञ्च विधिना मानुषीं पराम् ।
> उद्वहेदन्यथा नैव पुत्त्रपौत्त्रादिहृद्विजाम् ।
> विसृज्याग्निं कङ्कणञ्च मानुषीमुद्वहेत् पराम् ।
> अनेन विधिना यस्तु कुर्य्यादर्कविवाहकम् ।
> पुत्त्रपौत्त्रादिसम्पत्तिः चतुर्थ्यां लभते नरः ।

इत्यन्तेन तेनोपसंहारात् । एवञ्च पुत्त्रपौत्त्रादिमतः रत्यर्थं तृतीयविवाहं चिकीर्षोरर्कविवाहं कृत्वैव चतुर्थविवाहः कर्त्तव्यः नान्यथेति प्रतीयते न तु तृतीयविवाहमात्रं निषिध्यते इत्येव सकलवचनतात्पर्य्यम् ।

> चतुर्थादिविवाहार्थं तृतीयेऽर्कं समुद्वहेदिति ।

विधानपारिजातनिर्णयसिन्धुधृतसंग्रहवाक्येन स्पष्टं तथैवोक्त-त्वात् । एतेन पुत्त्रपौत्त्रादिमतः साग्निकस्य कुटुम्बरूपजाया-वतश्च रत्यर्थं तृतीयविवाहेच्छायाम् अर्कविवाहपूर्व्वकं चतुर्थ-

विवाहस्य विधानात् स्पष्टं क्रमशोऽपि बहुविवाहपक्षः सुपपन्नः ।

अर्कविवाहप्रकारस्तु विधानपारिजाते विस्तरेणोक्तस्तत्रैव द्रष्टव्यः । अत्र चतुर्थादिविवाहार्थमित्युक्तेश्च बहुत्वं न त्रित्व-पर्य्यवसायीति यदुक्तं तद्दृढीकृतं वेदितव्यम् । एतेन चतुर्थादिविवाहस्य बन्ध्यपत्नीकविषयकत्वस्य क्रमशः मृतपत्नीक-विषयकत्वस्य वा कल्पनमप्यपास्तम् । साग्निकत्वविशेषणेन स्त्रि-या विद्यमानताप्रतीतेः पुत्त्रपौत्त्रादिमत्त्वविशेषणेन च बन्ध्य-स्त्रीविषकत्वासम्भवात् ।

इदानीं क्रमशो बहुविवाहे कालविशेषो निमित्तविशेष-श्चाभिधीयते । तत्र मनुना

> जायायै पूर्व्वमारिण्यै दत्त्वाग्नीनन्त्यकर्म्मणि ।
> पुनर्द्दारक्रिया कुर्य्यात् पुनराधानमेव च ॥

इति दारमरणरूपः एकः कालः अभिहितः ।

अत्र विशेषयति विधानपारिजातधृतबौधायनसूत्रम् ।

> धर्म्मप्रजासम्पन्नेऽदारे नान्यां कुर्व्वीत
> अन्यतराभावे कार्य्या प्रागग्न्याधेयेति ॥

दाराणामभावः अदारम् अर्थाभावेऽव्ययीभावः ततः सप्तम्या बहुलमलुक् । सम्पन्नं सम्पत्तिः भावे क्तः । धर्म्मस्य अग्निहोत्रादिकस्य गृहस्थकर्त्तव्यस्य यावद्धर्म्मस्य, प्रजायाश्च सम्पत्तौ सत्यां दाराभावे अन्यां स्त्रियं न कुर्व्वीत नान्या-मुद्वहेदित्यर्थः । किन्तु वनं मोक्षं वाश्रयेत्

> ऋणत्रयमपाकृत्य मनोमोक्षे निवेशयेत् इति

मनुना ऋणत्रयापाकरणे मोक्षाधिकारित्वसूचनात्

जायमानो वै पुरुषस्त्रिभिर्ऋणैर्ऋणी भवति ब्रह्मचर्य्येण
ऋषिभ्यः, यज्ञेन देवेभ्यः, प्रजया पितृभ्य इति

ऋष्यादित्रयर्णस्य वेदाध्ययनाग्निहोत्रादियागपुत्रोत्पत्तिभिरपाकरणात् यावद्गृहस्थकर्त्तव्यकरणाच्च न दारान्तरकरणं तत्फलस्य धर्म्मपुत्रादेः कृतत्वात्। किन्तु यदि न रागनिवृत्तिस्तदा तत्फलार्थविवाहकरणं अङ्गीकृतम्। धर्म्मप्रजेति विशेषणाच्च रतिफलविवाहस्य तदा कर्त्तव्यतेति गम्यते अन्यथा धर्म्मप्रजेति नाभिदध्यात् तथाच ऋणत्रयशोधने अनुपयोगितया तत्तत्फलमुद्दिश्य न विवाहान्तरकरणमिति सिद्धम्। (अन्यतराभावे) धर्म्मप्रजयोर्म्मध्ये एकतराभावे धर्म्माभावे पुत्राभावे वा (अन्या कार्य्या) प्राग्वत् आश्रराधया यथा तथा कार्य्येत्यर्थः। एवञ्च मनुना द्वितीयविवाहे यद्दारमरणकालः उक्तः तस्य अन्यतराभावविषयकत्वं न तु जायामरणमात्रे एव जायान्तरकरणविषयकत्वम्। ततश्च मनुवचनेन जायामरणे जायान्तरकरणं यत् प्राप्तं तत्धर्म्मप्रजासम्पत्तौ निषिध्यते "प्राप्तं हि प्रतिषिध्यते" इति न्यायात् तथा च मनुवचनस्य अवकाशविशेषदानार्थमेव अन्यतराभावे इत्यादि प्रतीकं प्रवृत्तम्। एतेन धर्म्मप्रजासम्पन्ने दारे नान्यां कुर्व्वीतेति प्रतीकमात्रं धृत्वा उत्तरप्रतीकं निगुह्य यत् धर्म्मप्रजासम्पन्नयुक्तदारसत्त्वे दारान्तरकरणनिषेधकतया कल्पनं तदतीव अयुक्तिकं दारेषु सत्सु दारान्तरकरणं यदि तन्मते क्वचित् प्राप्तं स्यात् तदा तत् प्रति-

विधीत। प्रागग्न्याधेयेति वचनाच्चैतद्वचनस्य सवर्णाविषयकत्वे स्थिते कामतः प्रवृत्तविवाहविषयकत्वेन न प्राप्तिसम्भवः तन्मते कामतो विवाहस्य असवर्णामात्रपरत्वात्। किञ्च धर्म्मप्रजा-सम्पन्ने इत्युक्त्वा तदर्थविवाहमात्रविषयकत्वावगमेन रत्यर्थ-विवाहविषयकत्वकल्पनमप्ययुक्तिकं तत्पदवैयर्थ्यापत्तेः उभय-फलसिद्धौ दारसत्त्वे दारान्तरकरणं निषिध्य, तदेकतराभावे धर्म्माभावे पुत्त्राभावे च दारसत्त्वे दारान्तरकरणं कथमेकमात्र-विवाहवादिमते सङ्गतं स्यात्। तन्मते पुत्त्राभावे दारसत्त्वे दारान्तरकरणस्य विहितत्वेऽपि अग्निहोत्रादियावत्कर्त्तव्य-धर्म्माभावेऽपि पुत्त्रसत्त्वे च दारान्तरकरणस्य निषिद्धत्वात् एतेन सति च अदारे इति छेदेनैव सम्भवामञ्जस्ये "दाराक्षतलाजानां बहुत्वं च" इति पुंस्त्वाधिकारीयं पाणिनीयं लिङ्गानुशासन-मुल्लङ्घ्य दारशब्दस्य एकवचनान्ततास्वीकारः अगतिकगति-तया हेय एव।

न च रत्यर्थकस्यासवर्णामात्रविवाहस्य प्राप्ततया धर्म्म-प्रजासम्पत्तौ नान्यामित्यनेन निषेधः, रत्यर्थविवाहस्य असवर्णा-मात्रविषयकत्वे प्रामाणाभात् बाधकमन्तरेण सवर्णाविषयकत्व-स्यापि सम्भवात्। किञ्चोत्सर्गापवादयोरेकविषयकत्वेन अप-वादस्य अन्यतराभावे प्रागग्न्याधानपूर्व्वकस्य दारकरणस्य सवर्णामात्रविषयकत्वापत्तेः उत्सर्गस्यापि नान्यामिति निषेध-स्यापि सवर्णामात्रविषयकत्वोचित्यम्। ततश्च

अथाग्न्योर्म्मर्यादीर्घाग सपत्नीभेदजातयोः।

इत्यादि प्रागुक्तनिर्णयसिन्धुधृतशौनकवचनेन क्रमशः ऊढायाः सहाधिकारसिद्धार्थमग्न्याधानविधानेन अग्न्याधाने च सवर्णाया एवाधिकारेण क्रमशः सवर्णाविवाहः कर्त्तुं शक्यते इति स्पष्टं प्रतीयते, प्रतीयते च प्रागुक्तविधानपारिजातधृते

पुत्रपौत्रादिसम्पन्नः कुटुम्बी साग्निको द्विजः इत्यादि

वचने पुत्रपौत्रादिमतः जायावतश्च तृतीयविवाहनिषेधेन द्वितीयविवाहः। तद्विषये एव प्रागुक्तशौनकवचने रत्यर्थम् अर्कविवाहपूर्व्वकं चतुर्थादिविवाहः कर्त्तुं शक्यते इति च स्पष्टमवगम्यते। ततश्च बह्वीनां सवर्णानामपि क्रमशो विवाहः शास्त्रसिद्ध इति सिद्धम्।

तदयं निर्गलितोऽर्थः। क्रमशः धर्म्मार्थे द्वितीयविवाहे गृहस्थोचितसर्व्वधर्म्माभावे पत्नीमरणकालः एकः। पुत्रार्थविवाहे तु पुत्राभावसहकृतपत्नीमरणकालः एकः। पत्नीवन्ध्यत्वादिकालः द्वितीयः। तत्रापि तदवधारणे तदनुमतिमन्तरेणापि तां परित्यज्य विवाह इति विशेषः। रत्यर्थविवाहे तु पत्न्यन्तरसत्त्वे पुत्रपौत्रादिसत्त्वेऽपि इच्छाकालः एकस्तत्रापि द्वितीयमात्रविवाहः कर्त्तुं शक्यते तृतीयादिविवाहकरणेच्छायान्तु तत्समये अर्कविवाहं कृत्वा चतुर्थादिविवाहः कर्त्तुं शक्यते इति तत्र तु पूर्व्वोढपत्नीसम्मत्यपेक्षेति विशेषः। रत्यर्थविवाहस्तु सवर्णाविषयः असवर्णाविषयश्चेति।

तदेवं सवर्णामात्रविषयकैकविवाहमात्रपक्षस्य विपक्षसम्मतस्य अपाकरणेन "कति विवहेत्" इत्यपेक्षायां बह्वीः युगपत्

क्रमशो वा विवहेत् इत्याकाङ्क्षापूरणेन स्वपक्षे स्थिरीकृते इदानीं का विवहेदित्याकाङ्क्षापरिपूरणार्थमभिधीयते।

सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्म्मणि।
कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशो वराः॥
शूद्रैव भार्य्या शूद्रस्य सा च स्वा च विशः स्मृते।
ते च स्वा चैव राज्ञश्च ताश्च स्वा चाग्रजन्मनः॥

इति मनुवचनम् (अग्रे) स्वोक्तधर्म्मरतिपुत्त्ररूपविवाह-फलत्रयमध्ये श्रेष्ठे धर्म्मे इत्यर्थः निमित्तार्थे सप्तमी तथा च धर्म्मनिमित्ते (दारकर्म्मणि) दारत्वसम्पादके संस्काररूपे क्रिया-कलापे (द्विजातीनां सवर्णा प्रशस्ता) मुनिभिर्विहिता (तु) पुनः (कामतः) रतिकामतः बहुपुत्त्रकामतश्च (प्रवृत्तानाम्) तदुपायसाधनार्थं यत्नवतां दारकर्म्मणीत्यनुषज्यते (इमाः) वक्ष्यमाणाः सवर्णादयः (क्रमशः) वर्णक्रमेण (वराः) विहितत्वेन श्रेष्ठा इत्येवमर्थपरम्। तासां च वरत्वं पिण्डदानयोग्य-धनविशेषहारिपुत्त्रोत्पत्तिसाधनत्वात् तथा च सवर्णाया अलाभे अनन्तरवर्णाम्, तस्या अप्यलाभे तदनन्तरवर्णां विवहे-दिति समुदितार्थः। अत्राप्येकत्वमविवक्षितं प्रागुक्तयुक्तेः, इच्छाया निरङ्कुशत्वाच्च यावदिच्छं तावद्विवाहस्योचितत्वात्। एतदभिप्रायेणैव एतत्समानार्थकस्य

भार्य्याः कार्य्याः सजातीयाः सर्व्वेषां श्रेयस्यः स्युरिति
मुख्यः कल्पस्तदनुकल्पस्तु चतस्रो ब्राह्मणस्य
तिस्रो राजन्यस्य, द्वे वैश्यस्येति।

पैठीनसिवचनस्य तात्पर्य्यविद्योतनार्थं दायभागकृता चतुरादिसंख्या जात्यवच्छेदेनेत्युक्तम् चतुर्जात्यवच्छिन्नतया विवाहं व्यवस्थापयता च तेन एकैकवर्णीया अपि पञ्चादि-संख्या न विरुद्धेति द्योतितं तच्च इच्छाया निरङ्कुशत्वेनैव प्रागुक्तवचनजातेन विवाहबहुत्वप्रतिपादनेन च सुदृढमित्युत्-पश्यामः।

अर्थने चातिरागे च याद्यावेकापि च द्विज ।।

इति प्रागुक्तपुराणवचनेनापि धर्मकार्य्यार्थं सवर्णा विवाह्या बहुपुत्रेच्छायामतिरागे च असवर्णा अपि विवा-ह्येति प्रतिपादितम्। अत्रैकानेकाशब्दयोर्यथा सवर्णासवर्णा-परत्वं तथा दर्शितं प्राक्। एतदर्थं पुत्रपौत्रादिमतः आयावतश्च चतुर्थादिविवाहसिद्ध्यर्थमकैविवाहं प्रतिपादयता च प्रागुक्तेन शौनकवचनेन चतुर्थादिपदात् बहुविवाहस्यापि विहितत्वमव-गम्यते। तत्र एकत्वमविवक्षितमित्यप्युक्तम्। अत एव पुत्रकामेण सौभरिणा एकदैव बह्व्यः क्षत्रिया व्यूढा इति पुराणनिर्देशः। सोऽप्यत्रानुग्राहकः।

इत्येवं रतिकामस्य बहुपुत्रकामस्य च सवर्णासवर्णागत-बहुत्वविषयके विवाहे व्यवस्थापिते प्रतिवादिना यत् मनुवच-नम् परिसंख्यापरत्वेन कल्पितं तत् प्रतिवक्तव्यम्।

तथा हि मानववचनस्य यत् परिसंख्यापरत्वं कल्प्यते तत् कस्य हेतोः ? न तावत् तस्य परिसंख्याकल्पकं किञ्चित् वचः

नान्तरमस्ति, नापि युक्तिः, न वा प्राचीनसन्दर्भसम्मतिः। तथा च असति परिसंख्याकल्पकवचनयुक्त्यादौ दोषत्रयग्रस्तां परिसंख्यां स्वीकृत्य मानववचनस्य यत् दोषत्रयकलङ्कपङ्के निक्षेपणं कृतं तत् केवलं स्वाभीष्टसिद्धिमनीषयैव। पारिसंख्यायां हि

श्रुतार्थस्य परित्यागात् अश्रुतार्थस्य कल्पनात्।
प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदोषिका इति॥

श्रुतार्थत्यागाश्रुतार्थकल्पनप्राप्तबाधरूपं मीमांसाशास्त्रसिद्धं दोषत्रयं स्वीकार्य्यं तस्य च सति गत्यन्तरे नैवाङ्गीकार्य्यता। तत्र प्राप्तिश्च शास्त्रतो रागतो वा नियता। एवञ्च प्रागुक्तरीत्या मानववचनस्य अप्राप्तिप्रापकत्वरूपोत्पत्तिविधिपरतयैवोपपत्तौ न परिसंख्यापरत्वम्। न च सवर्णाविवाहस्य प्राप्तत्वेन तदंशेऽनुवादापत्तिः, धर्म्मकामस्य सवर्णाविवाहस्य प्राप्तत्वेऽपि विशिष्टरतिपुत्त्रकामयोरप्राप्ततया तत्तत्कामनावतश्च तत्तत्फलसिद्धये प्रवृत्त्यौपयिकत्वेनोत्पत्तिविधित्वसम्भवात् यथा "खादिरे पशुं बध्नाति" इत्यादिवाक्येन नित्यप्राप्ततया प्राप्तस्यापि यूपस्य "खादिरं वीर्य्यकामस्य यूपं कुर्व्वीत" इति वीर्य्यकामवतः खादिरत्वविधानमेवं विशिष्टफलस्य अप्राप्तेः तदंशे उत्पत्तिविधित्वं सम्भवत् केन वार्य्येत।

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते॥

इति भट्टोक्तस्य परिसंख्याहेतुभूतस्य तत्तदन्ययोः पक्षयोः प्राप्तिरूपस्य न चात्र सम्भवोऽस्ति। तथा हि (तत्र) श्रुतपदार्थे (अन्यत्र) अश्रुतपदार्थे च प्राप्तिः केनचित्? शास्त्रेण सम्भवोऽस्ति। येन तस्यां सत्यां श्रुतार्थत्यागः, अश्रुतार्थकल्पनम्, रागतः शास्त्रतो वा प्राप्तस्य बाध इत्येवं दोषत्रयं स्वीकार्य्यं तच्च गत्यन्तरे नैवाङ्गीकार्य्यमित्युक्तम्। प्रकृते च श्रुता सवर्णा असवर्णा च विवाहकर्म्मत्वेन, इमा इति इदमः पुरोवर्त्तिनीनामेव निर्द्देशकत्वेन अग्रिमवचने च सवर्णाया असवर्णायाश्च स्वस्वपदेन निर्द्देशेन च तासामेव विवाहकर्म्मत्वावगमात्। ततश्चात्र विहितं सवर्णागतम् असवर्णागतञ्च विवाहकर्म्मत्वं कस्मिन्? शास्त्रान्तरेऽवगतम् कस्मिन्? वा सवर्णासवर्णाभिन्नानां सङ्कीर्णवर्णानां विवाहकर्म्मत्वं प्राप्तं येन मानववचनस्य विवाहकर्म्मतया प्राप्तिसम्भवकथनेन इतरनिवर्त्तकपरिसंख्यापरत्वं कल्प्यते।

यथा "इमामगृभ्णन् रशनामृतस्य" इत्यादौ यज्ञाङ्गपश्वालम्भने गर्द्दभाश्वादेः रशनाग्रहणप्राप्तौ प्रवृत्तेन "इत्यश्वाभिधानीमादत्ते" इत्यादिवाक्येन अश्वाभिधानीरूपाश्वबन्धनरज्जुग्रहणं विधातुं न शक्यते प्राप्तत्वात्। अतः श्रुतविषये अश्रुतविषये च प्राप्तौ श्रुतार्थपरित्यागेन अश्रुतार्थकल्पनेन प्राप्तस्यापि बाधेन इतरनिषेधस्तत्र कल्प्यते।

तथा हि "अश्वाभिधानीमादत्ते" इति वाक्यस्य स्वार्थपरत्वे "इमामगृभ्णन् रशनामृतस्य" इति शास्त्रेण तस्य यज्ञाङ्गपशोः रशनाग्रहणस्य प्राप्तत्वेन विधित्वासम्भवः। अतस्तद्वाक्यं

अश्वाभिधानीपदम् अश्वातिरिक्तगर्द्दभादिरशनायाम्, आदत्ते इति पदं च ग्रहणाभावे लाक्षणिकं, तथा च अश्वातिरिक्त-रशनां न गृह्णीयादिति वाक्यार्थः सम्पद्यते। एवं च स्वार्थ-परित्यागेन अन्यार्थकल्पनेन सामान्यशास्त्रेण प्राप्तस्य गर्द्दभा-दिरशनाग्रहणस्य बाधेन परिसंख्यापरत्वमगत्या कल्प्यते। नैवमत्र उक्तदोषत्रयग्रस्तायाः परिसंख्यायाः सति गत्यन्तरे ग्राह्यतायां बीजमस्ति येनागत्या तत्स्वीकारः। न चात्र विशिष्टपुत्त्रकामस्य विशिष्टरतिकामस्य च सवर्णाया असवर्णाया वा विवाहावेदकं किञ्चित् शास्त्रमस्ति। नापि रागतः प्राप्ति-सम्भवः। यथा "पञ्च पञ्चनखान् भुञ्जीत" इति वाक्येन रागतः प्राप्तस्य पञ्चनखभोजनस्य विधानासम्भवेन पञ्चनख-पदं शशादिपञ्चनखभिन्ने, भुञ्जीतेति पदञ्च न भुञ्जीतेति भोजनाभावे च लाक्षणिकमेवञ्च शशादिपञ्चकभिन्नपञ्चनखान् न भुञ्जीतेति तत्र वाक्यार्थः सम्पद्यते तत्र च श्रुतार्थस्य पञ्च-नखपञ्चकरूपस्य परित्यागेन, अश्रुतार्थस्य तदतिरिक्तभोज-नाभावस्य कल्पनेन, रागप्राप्तस्य शशादिभिन्नपञ्चनखभोज-नस्य बाधेन च परिसंख्या दोषत्रयग्रस्ताप्यगत्या स्वीक्रियते। नैवमत्र सम्भवति, सवर्णाया असवर्णाया वा विवाहस्य प्राग्-दर्शितशास्त्रादिभ्यः अलौकिकसंस्कारापादकरूपतया शास्त्र-मन्तरेण रागतः प्राप्त्यभावात्। ततश्च तत्तदन्ययोः प्राप्ति-रूपस्य परिसंख्याबीजस्य प्रकृतेऽसम्भवात् कथङ्कारं मानव-वचनस्य परिसंख्यापरत्वं स्यात्।

किञ्च विवाहस्य रागप्राप्तत्वाङ्गीकारे प्रथमविवाहस्यापि रागप्राप्ततया

सवर्णां स्त्रियमुद्वहेदित्यादि ।

मनुवचनस्यापि परिसंख्यापरत्वापत्तिः दुर्व्वारैव। स्वीकृतञ्च विद्यासागरेणाप्यस्य वाक्यस्योत्पत्तिविधित्वमतः स्वोक्तविरुद्धतया प्रत्यवस्थाने तस्य विस्तृष्यकारिता कथङ्कारं तिष्ठेत् यथा च विवाहस्य अलौकसंस्कारापादकत्वेन न रागप्राप्तत्वं तथा प्रतिपादितं पुरस्तात्। किञ्च परिसंख्यायामितरनिवृत्तिरेव विहिता विधिप्रत्ययार्थोऽश्यत्वस्यैव विहितत्वात् "अध्याभिधानीमादत्ते" इत्यादौ च अश्वातिरिक्तरशनाग्रहणाभाव इष्टसाधनं तादृशग्रहणाभावेन इष्टं भावयेदिति वा, "पञ्च पञ्चनखान् भुञ्जीत" इत्यादौ च शशादिपञ्चकभिन्नपञ्चनखभोजनं न इष्टसाधनम् इति तत्र तत्र विध्यर्थः फलितः तत्र च अश्वरशनाग्रहणे शशादिभोजने च तत्तद्विधेरौदासीन्यमेवेत्येवं परिसंख्यापरत्वे स्थितायां मानववचनेऽपि सवर्णाया असवर्णाया वा विवाहे विधेरौदासीन्यमेव वाच्यं, केवलं तदतिरिक्तविवाहाभाव एव विहितः स्यात् तथा च क्षत्रियादीनाम् असवर्णानां कथं विवाहसिद्धिर्भवेत्। ततश्च क्षत्रियादिविवाहस्याविहितत्वेन तद्गर्भजातसन्तानस्यानौरसत्वापत्तिः। किञ्च क्षत्रियादिगर्भजातपुत्राणां विभागकथनादेव तद्विवाहस्य विहितत्वं मनोरभिमतमिति प्रतिभाति। तद्विरोधेन तेन क्षत्रियाद्यसवर्णाविवाहविधानस्य परिसंख्यापरत्वं कथं कल्प्येत

यदि स्वाच पराश्चैव विन्देरन् योषितो द्विजाः।
तासां वर्णक्रमेणैव ज्येष्ठं पूजा च वेश्म चेति।

मनुना सवर्णानामिवासवर्णानां "विन्देरन्" इत्यादिना विवाहानुवादेन गृहादिविशेषविधानात् असवर्णानां विवाह एव मनोरभिमतः न तु तदतिरिक्तविवाहाभावः। तथात्वे तासां विवाहावेदकशास्त्राभावेन कथङ्कारं विन्देरन्निति निर्द्दिशेत। सत्येव चत्रियादिविवाहस्य विहितत्वे तदनुवादेन पूजादिविशेषविधानं सङ्गच्छते नेतरथा। तथा एतद्वचनस्य स्वार्थपरत्वे एव क्रमश इति पदमपि सार्थकं न अस्वार्थपरत्वे, तस्य असवर्णारिक्तां न विवहेदित्येवंपरत्वेन तत्र क्रमशः इत्युक्तिरनर्थिकैव। अत एवाक्रमोढ़ासन्तानस्यांशहारित्वाभावः स्मृत्यन्तरे दर्शितः। न च परिसंख्यायां स्वार्थपरत्वमपि केनचिदुपेयते असवर्णाग्रहणस्य तु "इमामगृह्णन्" इत्यादिशास्त्रेणैव प्राप्तत्वात् "इत्यस्याभिधानीमादत्ते" इत्यादिवाक्यस्य स्वार्थपरत्वाभावात् स्वार्थपरत्वे परिसंख्यायाः स्वरूपानिष्पत्तेश्च। तथा च क्वचिदप्यदृष्टचरी ईदृशी परिसंख्यानिशाचरी तामसप्रियाणामेव मोदायालमपि नैव मीमांसासरणितरणिदीधितिनिःसारिततमस्तोमानां समुन्मीलितनेत्राणामालोड़िततन्त्राणाम्।

किञ्च मनुना इमाश्चेति इदमा पुरोवर्त्तिनीनामेव दारकर्म्मणि वर्णक्रमेण वरत्वमुक्तं पुरोवर्त्तिन्यश्च ब्राह्मणस्य सवर्णा चत्रियाद्यश्चितस्त्रश्च, चत्रियस्य सवर्णा वैश्याशूद्रे च, वैश्यस्य

सवर्णा शूद्रा च, शूद्रस्य शूद्रैवेति । तस्य च परिसंख्यापरत्व-कल्पने श्रुताभ्यः एव सवर्णासवर्णाभ्यः अतिरिक्तविवाहनिषेध-परत्वं वाच्यं ततश्च कथङ्कारम् असवर्णातिरिक्तमात्रं निषेध्येत । तथा च तथा कल्पनम् अर्द्धजरतीयन्यायमनुहरति । न हि

शशकः शल्लकी गोधा खड्गी कूर्मश्च पञ्चमः ।
भक्ष्यान् पञ्चनखेष्वाहुः ।

इति मनुवचने श्रुतात् शशादिपञ्चकादतिरिक्तपञ्चनख-भोजनस्य निषेधके तन्मध्ये कस्यचिदेकस्यैव निषेधः कल्पयितुं शक्यते । एवमिहापि इमा इति पदेन परामृष्टानां मध्ये एकस्या एव परिसंख्याविषयत्वमयुक्तमेव । किञ्च श्रुतयोः सवर्णासवर्णाविवाहयोर्मध्ये किं सवर्णाविवाहस्य परिसंख्या-परत्वम् आहोस्वित् असवर्णाविवाहस्य ? न तावदाद्यः रति-कामानां सवर्णातिरिक्तविवाहस्य निषेधे क्षत्रियादीनामसवर्ण-तया तद्विवाहस्यापि निषेधापत्त्या तदनिष्टापातात् नापि द्वितीयः असवर्णातिरिक्तविवाहनिषेधे वन्ध्यत्वादिनिमित्तेनापि सवर्णाविवाहनिषेधापत्तेः । असति च शास्त्रान्तरे तन्निषेधपरत्वं कल्प्यते इति चेत् तदा सवर्णाविवाहस्यापि अस्मिन्नेव मनुवचने विधानेन एतस्यैव शास्त्रान्तरतया जागरूकत्वात् तन्निषेधानुप-पत्तेः । एतेन मानववचनस्थं स्युरिति पदं निगृह्य असवर्णा-विवाहस्य परिसंख्यापरत्वकल्पनं निर्युक्तिकमसङ्गतञ्च । ततश्च असवर्णाविवाहस्य क्वचिदपि शास्त्रेऽप्राप्ततया तस्योत्पत्तिविधि-त्वौचित्ये स्थिते तदंशे परिसंख्यापरत्वकल्पनमतीव प्रामादिकम् ।

किञ्च कामनावाचकपदसमभिव्याहारे विधेः परिसंख्या-परत्वं कथञ्चिदपि न सम्भवति। तथा हि "स्वर्गकामो यजेत" इत्यादिना विधिप्रत्ययार्थम् इष्टसाधनत्वं यागे बोधयता कामना-विषय एवं इष्टं बोध्यते तथा च यागः स्वर्गसाधनं यागेन स्वर्गं साधयेदिति वा तत्र वाक्यार्थः। परिसंख्यायाश्च इतर-निवृत्तिपरत्वेन कामनाविषयफलस्य कस्मिन् विषये साधनत्वं शास्त्रं बोधयेत्? तथा च "पुत्रकामो रतिकामो वा विवहेत्" इति वाक्येन विवाहेन पुत्रं रतिं वा साधयेत् विवाहो वा तत्तत्फलस्य साधनमिति बोध्यते तत्र विधेः परिसंख्यापरत्वे असवर्णाविवाहो नेष्टसाधनमिति बोधे जनयितव्ये विवाहस्य पुत्ररतिसाधनत्वं नावगम्यते किन्तु तदतिरिक्तविवाहे अनिष्ट-साधनत्वमात्रं ततश्च तत्तत्कामनावतः न तत्र प्रवृत्तिः। विधे-स्त्वेष स्वभावः यत् स्वविषये समभिव्याहृतपदोपस्थाप्यकामनावि-षयफलसाधनतां बोधयन् तत्तत्कामनाविशिष्टं नियोज्यं पुरुषं स्वविषये प्रवर्त्तयति। प्रकृते च असवर्णातिरिक्तविवाहस्य निषेध-परत्वे कथङ्कारं तत्तत्फलकामनया तत्र प्रवृत्तिः सम्भवेत्।

इत्येवं परिसंख्यापरत्वरूपाभिनवार्थकल्पनया स्वाभीष्ट-सिद्धये असवर्णातिरिक्तविवाहनिषेधपरत्वं यत् व्यवस्थापितं तन्निर्मूलं निर्युक्तिकं स्वकपोलकल्पितं प्राचीनसन्दर्भासम्मतं परि-संख्यासरण्यननुसृतं बहुविरोधग्रस्तञ्च प्रमाणपरतन्त्रैस्तान्त्रिकै-रश्रद्धेयमेव। तस्य निवारणार्थं यद्यपि प्रयास एवानुचितः तथापि पण्डितम्मन्यस्य स्वाभीष्टसिद्धये तत्राग्रहवतः परि-

संख्यारूपार्थकल्पनरूपावलेपवतस्य तस्यावलेपखण्डनेन तद्वाक्ये विश्वासवतां संस्कृतपरिचयशून्यानाम् तदुद्भावितपदव्या बहु-लदोषग्रस्ततावोधनायैव प्रयत्नः कृतः। परिशेषे इदमपि खेदेन प्रकाश्यते “यत् ईदृशपरिसंख्याकल्पनायाः निरासाय लेखनी व्यापारमासादयति, तादृशार्थकल्पने च शास्त्रीयतया विश्वासः” अहो वैदग्धी प्रज्ञावतो विद्यासागरस्य “यत् अकि-ञ्चित्कराभिनवार्थप्रकाशनेन बहवो लोका व्यामोहिता इति” इत्यलमकिञ्चित्करपरिसंख्याकल्पनापोहार्थमनल्पजल्पनेन।

तथा च रतिकामः बहुपुत्रकामश्च सवर्णा असवर्णाश्च बह्वी-र्विन्देतेति सकलवचनतात्पर्य्यार्थ इति सिद्धम्।

ओं तत्सत् शिवम्।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यविरचितः बहुविवाहवादः समाप्तः।

संवत् १९२९।